॥ वासुदेवोपनिषत् ॥

(सामवेदीय)

यत्सर्वहृदयागारं यत्र सर्वं प्रतिष्ठितम् ।
वस्तुतो यन्निराधारं वासुदेवपदं भजे ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः
श्रोत्रमथो बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं
माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणम-
स्त्वनिराकरणं मेस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

(ऊर्ध्वपुण्ड्रविधिजिज्ञासा)

ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ
अधीहि भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे
ब्रूहीति ।

(गोपीचन्दनस्वरूपम्)

तं होवाच भगवान्वासुदेवो वैकुण्ठस्थानादुत्पन्नं
मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं
ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दन-
माख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं
चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति ।

(गोपीचन्दनोद्धारधारणयोर्विधानम्)

अथ गोपीचन्दनं नमस्कृत्वोद्धृत्य ।
गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ।
इमं मे गङ्गे इति जलमादाय विष्णोर्नुकमिति मर्दयेत् ।
अतो देवा अवन्तु न इत्येतन्मन्त्रैर्विष्णुगायत्र्या केशवादि-
नामभिर्वा धारयेत् ।

(ब्रह्मचार्यादीनां धारणाप्रकारः)

ब्रह्मचारी वानप्रस्थो वा
ललाटहृदयकण्ठबाहूमूलेषु वैष्णवगायत्र्या
कृष्णादिनामभिर्वा धारयेत् । इति त्रिवारमभिमन्त्र्य
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गोविन्द
पुण्डरीकाक्ष रक्ष मां शरणागतम् । इति ध्यात्वा
गृहस्थो ललाटादिद्वादशस्थलेष्वनामिकाङ्गुल्या
वैष्णवगायत्र्या केशवादिनामभिर्वा धारयेत् ।
ब्रह्मचारी गृहस्थो वा ललाटहृदयकण्ठबाहूमूलेषु
वैष्णवगायत्र्या कृष्णादिनामभिर्वा धारयेत् ।
यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेनैव धारयेत् ।

(त्रिपुण्ड्रस्य त्रिमूर्त्यादिरूपत्वम्)

ब्रह्मादयस्त्रयो मूर्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दांसि
त्रयोऽग्नय इति ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय
आत्मानः पुण्ड्रात्रय ऊर्ध्वा अकार उकारो मकार एते
प्रणवमयोर्ध्वपुण्ड्रास्तदात्मा सदेतदोमिति । तानेकधा
समभवत् । ऊर्ध्वमुन्नमयत इत्योङ्काराधिकारी ।
तस्मादूर्ध्वपुण्ड्रं धारयेत् । परमहंसो ललाटे
प्रणवेनैकमूर्ध्वपुण्ड्रं वा धारयेत् ।

(वासुदेवध्यानप्रकारः)

तत्त्वप्रदीपप्रकाशं स्वात्मानं पश्यन्योगी
मत्सायुज्यमवाप्नोति । अथ वा न्यस्तहृदयपुण्ड्रमध्ये
वा हृदयकमलमध्ये वा ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ।
नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी परमात्मा व्यवस्थित इति ।
अतः पुण्ड्रस्थं हृदयपुण्डरीकेषु तमभ्यसेत् ।
क्रमादेवं स्वात्मानं भावयेन्मां परं हरिम् ।
एकाग्रमनसा यो मां ध्यायते हरिमव्ययम् ।
हृत्पङ्कजे च स्वात्मानं स मुक्तो नात्र संशयः ।
मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् ।
स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् ।

(वासुदेवस्य सर्वात्मत्वम्)

एको विष्णुरनेकेषु जङ्गमस्थावरेषु च ।
अनुस्युतो वसत्यात्मा भूतेष्वहमवस्थितः ।
तैलं तिलेषु काष्ठेषु वह्निः क्षीरे घृतं यथा ।
गन्धः पुष्पेषु भूतेषु तथात्मावस्थितो ह्यहम् ।

(बासुदेवध्यानस्थानेषु गोपीचन्दनधारणम्)

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृदये चिद्रविं हरिम् ।
गोपीचन्दनमालिप्य तत्र ध्यात्वाप्नुयात्परम् ।
ऊर्ध्वदण्डोर्ध्वरेताश्च ऊर्ध्वपुण्ड्रोर्ध्वयोगवान् ।
ऊर्ध्वं पदमवाप्नोति यतिरूर्ध्वचतुष्कवान् ।
इत्येतन्निश्चितं ज्ञानं मद्भक्त्या सिध्यति स्वयम् ।
नित्यमेकाग्रभक्तिः स्याद्गोपीचन्दनधारणात् ।

(गोपीचन्दनभस्मनोर्धारणविधिः)

ब्राह्माणानां तु सर्वेषां वैदिकानामनुत्तमम् ।
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते ।
यो गोपीचन्दनाभावे तुलसीमूलमृत्तिकाम् ।
मुमुक्षुर्धारयेन्नित्यमपरोक्षात्मसिद्धये ।
अतिरात्राग्निहोत्रभस्मनाग्नेर्भसितमिदंविष्णुस्त्रीणि
पदेति मन्त्रैर्वैष्णवगायत्र्या प्रणवेनोद्धूलनं कुर्यात् ।
एवं विधिना गोपीचन्दनं च धारयेत् ।
यस्त्वधीते वा स सर्वपातकेभ्यः पूतो भवति ।
पापबुद्धिस्तस्य न जायते । स सर्वेषु तीर्थेषु स्नातो भवति ।
स सर्वैर्यज्ञैर्याजितो भवति । स सर्वैर्देवैः पूज्यो भवति ।
श्रीमन्नारायणे मय्यचञ्चला भक्तिश्च भवति ।
स सम्यग्ज्ञानं च लब्ध्वा विष्णुसायुज्यमवाप्नोति ।
न च पुनरावर्तते न च पुनरावर्तते इत्याह भगवान्वासुदेवः ।
यस्त्वेतद्वाधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो
बलमिद्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकणं मेस्तु
तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति वासुदेवोपनिषत्समाप्ता ॥